# पांडवगीता ।

पंडित कृपाराम शर्म्मणा स्वकीय

'तिमिरनाशक' यन्त्रालये

मुद्रापिता ।

बनारस ।

सं० १८९० ई०

श्रीः ॥

# अथ पांडवगीता।

श्रीगणेशायनमः ॥ पांडव उवाच ॥ प्रह्लादनारदपराशरपुण्डरीक व्यासांबरीषशुकशौनकभीष्मदाल्भ्यान् ॥ रुक्मांगदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥ १॥ लोमहर्षण उवाच ॥ धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन ॥ शत्रुर्विनश्यति धनंजयकीर्तनेन माद्रीसुतौ कथयतां न भवंतिरोगाः ॥ २ ॥ ब्रह्मोवाच। येमानवाविगतरागपरावरज्ञा नारायणं सुरगुरुं सततं स्मरंति ॥ ध्यानेन तेन हतकिल्बिषचेतनास्ते मातुः पयोधररसं न पुनः पिबंति ॥ ३ ॥ इंद्र उवाच ॥ नारायणो नाम नरो नराणां प्रसिद्ध

चोरः कथितः पृथिव्याम् ॥ अनेकजन्मार्जितपापत
संचयं हरत्यशेषं स्मरतां सदैव ॥ ४ ॥ युधिष्ठिर
र उवाच ॥ मेघश्यामं पीतकौशेयवासं श्रीवत्सांक
कं कौस्तुभोद्भासितांगम् ॥ पुण्योपेतं पुंडरीकाय
ताक्षं विष्णुं वंदे सर्वलोकैकनाथम् ॥ ५ ॥ भी
मसेन उवाच ॥ जलौघमग्ना सचराचरा धरा
विषाणकोट्याखिलविश्वमूर्तिना ॥ समुद्धृता येन
वराहरूपिणा स मे स्वयंभूर्भगवान्प्रसीदताम् ॥
॥ ६ ॥ अर्जुन उवाच ॥ अचिंत्यमव्यक्तमनंतम
व्ययं विभुं प्रभुं भावितविश्वभावनम् । त्रैलोक्य
विस्तारविचारकारकं हरिं प्रपन्नोऽस्मि गतिं म
हात्मनाम् ॥ ७ ॥ नकुल उवाच ॥ यदिगमनम
धस्तात्कालपाशानुबद्धो यदि च कुलविहीने जा
यते पक्षि कीटे ॥ कृमिशतमपि गत्वा जायते च

पतरात्मा मम भवतु हृदिस्थे केशवे भक्तिरेका ॥८॥
ठ्सहदेवउवाच ॥ तस्य यज्ञवराहस्य विष्णोरतुल
ततेजसः ॥ प्रणामं ये प्रकुर्वंति तेषामपि नमोन
मः ॥ ९ ॥ कुंत्युवाच ॥ स्वकर्मफलनिर्दिष्टांयां
मां योनिं व्रजाम्यहं ॥ तस्यां तस्यां हृषीकेश त्व
य्यिभक्तिर्दृढाऽस्तु मे ॥ १० ॥ माद्र्युवाच ॥ कृष्णो
दिताः कृष्णमनुस्मरंति रात्रौ च कृष्णं पुनरुत्थि
ता ये ॥ ते भिन्नदेहाः प्रविशंति कृष्णं हविर्य
था मंत्रहुतं हुताशे ॥ ११ ॥ द्रुपद उवाच ॥
कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षःपिशाचमनु
ष्येष्वपि यत्र यत्र ॥ जातस्य मे भवतु केशव त्व
त्प्रसादात्त्वय्येव भक्तिरचलाऽव्यभिचारिणी च
॥ १२ ॥ सुभद्रोवाच ॥ एकोपि कृष्णस्य सकृ
त्प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमे

धी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय तं
॥ १३ ॥ अभिमन्युरुवाच ॥ गोविंद गोविंद ह
मुरारे गोविंद गोविंद रथांगपाणे ॥ गोविंद ग
विंद मुकुंदकृष्ण गोविंद गोविंद नमोनमस्ते
॥ १४ ॥ धृष्टद्युम्न उवाच ॥ श्रीराम नाराय
वासुदेव गोविंद वैकुंठ मुकुंद कृष्ण ॥ श्रीके
वानंत नृसिंह विष्णो मां त्राहि संसारभुजंगद
॥ १५ ॥ सात्यकिरुवाच ॥ अप्रमेय हरे विष्ण
कृष्ण दामोदराच्युत ॥ गोविंदानंद सर्वेश व
देवनमोऽस्तुते ॥ १६ ॥ उद्धव उवाच ॥ व
देवं परित्यज्ययेऽन्यं देवमुपासते ॥ तृषिता
न्हवीतीरे कूपं वांछंति दुर्भगाः ॥ १७ ॥ धौ
उवाच ॥ अपां समीपे शयनासनस्थं दिवा च
त्रौ च यथा धिगच्छताम् ॥ यद्यस्तिकिंचित्सु

तं कृतं मया जनार्दनस्तेन कृतेन तुष्यतु ॥१८॥
संजय उवाच ॥ आर्ता विषण्णाः शिथिलाश्च भी
ताघोरेषु व्याघ्रादिषु वर्तमानाः ॥ संकीर्त्य नारा
यणशब्दमात्रं विमुक्तदुःखाःसुखिनो भवंति॥१९॥
अक्रूर उवाच ॥ अहं तु नारायणदासदासदास
स्यदासस्य च दासदासः ॥ अन्येभ्य ईशो जगतो
नराणां तस्मादहं चान्यतरोऽस्मि लोके ॥ २० ॥
विदुर उवाच ॥ वासुदेवस्य ये भक्ताः शांतास्त
द्गतमानसाः ॥ तेषां दासस्य दासोऽहं भवे ज
न्मनि जन्मनि ॥ २१ ॥ भीष्म उ० ॥ विपरीतेषु
कालेषु परिक्षीणेषु बंधुषु ॥ त्राहि मां कृपया कृष्ण
शरणागतवत्सल ॥ २२ ॥ द्रोणाचार्य उवाच ॥
ये ये हताश्चक्रधरेण राजंस्त्रैलोक्य नाथेन जना
र्दनेन ते ते गता विष्णुपुरीं प्रयाताः क्रोधोऽपि

देवस्य वरेण तुल्यः ॥ २३ ॥ कृपाचार्य उवाच। म
मज्जन्मनःफलमिदं मधुकैटभारे मत्प्रार्थनीयमद पि
नुग्रह एष एव॥त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्य मे
भृत्यस्यभृत्य इति मां स्मर लोकनाथ॥२४॥अश्व दे
त्थामोवाच ॥ गोविंद केशव जनार्दन वासुदे वि
विश्वेश विश्व मधुसूदन विश्वनाथ ॥ श्रीपद्मनभ
भ पुरुषोत्तम पुष्करक्ष नारायणाच्युत नृसिंन
नमो नमस्ते ॥ २५ ॥ कर्ण उवाच ॥ नान्यं रा
दामि न शृणोमि न चिंतयामि नान्यं स्मरा उ
न भजामि न चाश्रयामि ॥ भक्त्या त्वदीयचनंर
णांबुजमंतरेण श्री श्रीनिवासपुरुषोत्तम देहि सो
स्यम् ॥ २६ ॥धृतराष्ट्र उवाच ॥ नमो नमः रव
रणवामनाय नारायणायामितविक्रमाय ॥ मः
शार्ङ्गचक्राब्जगदाधरायनमोऽस्तुतस्मैपुरुषो

माय ॥ २७ ॥ गांधार्युवाच ॥ त्वमेव माता च
पिता त्वमेव त्वमेव बंधुश्च सखा त्वमेव ॥ त्व
मेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देव
देव ॥ २८ ॥ द्रौपद्युवाच ॥ यज्ञेशाच्युत गो
विंद माधवानंतकेशव ॥ कृष्ण विष्णो हृषीकेश
वासुदेव नमोस्तुते ॥ २९ ॥ जयद्रथ उवाच ॥
नमः कृष्णायदेवाय ब्रह्मणेऽनंतमूर्तये ॥ योगेश्व
राय योगाय त्वामहंशरणंगतः ॥ ३० ॥ विकर्ण
उवाच ॥ कृष्णाय वासुदेवाय देवकीनंदनायच ॥
नंदगोपकुमाराय गोविंदाय नमो नमः ॥ ३१ ॥
सोमदत्त उवाच ॥ नमः परमकल्याण नमस्ते वि
श्वभावन ॥ वासुदेवाय शांताय यदूनां पतये न
मः ॥ ३२ ॥ विराट उवाच ॥ नमो ब्रह्मण्यदे
वाय गोब्राह्मणहितायच ॥ जगद्धिताय कृष्णाय

गोविंदाय नमो नमः ॥ ३३ ॥ शल्य उवाच ॥ य
अतसीपुष्पसंकाशं पीतवाससमच्युतं ॥ ये न ि
मस्यंति गोविंदं न तेषां विद्यते भयम् ॥ ३४ ॥ श
बलभद्र उ० ॥ कृष्ण कृष्ण कृपालु स्त्वमगतीनां
नां गतिर्भव ॥ संसारार्णवमग्नानां प्रसीदपुरुषो कृ
त्तम ॥ ३५ ॥ श्रीकृष्ण उवाच ॥ कृष्ण कृष्णेति ना
कृष्णेति योमां स्मरति नित्यशः ॥ जलं भित्त्वा च
यथा पद्मं नरकादुद्धराम्यहम् ॥ ३६ ॥ सत्यं ब्रवि
वीमि मनुजाःस्वयमूर्ध्वबाहुर्यो मां मुद नरसिा
ह जनार्दनेति ॥ जीवो जपत्यनुदिनं मरणे रणेवा
वा पाषाणकाष्ठसदृशाय ददाम्यभीष्टम् ॥३७ मध्व
सूत उवाच ॥ तत्रैव गंगा यमुना च वेणी गोस्थ
दावरी सिंधुसरस्वती च ॥ सर्वाणि तीर्थानि वसंत
संति तत्र यत्राच्युतोदारकथा प्रसंगः ॥ ३८ ॥ यो

यम उवाच ॥ नरके पच्यमानं तु यमेन परिभा
षितम् ॥ किं त्वया नार्चितो देवः केशवः क्लेशना
शनः ॥ ३९ ॥ नारद उवाच ॥ जन्मांतरसह
स्रेणतपोध्यानसमाधिभिः ॥ नराणां क्षीणपापानां
कृष्णेभक्तिःप्रजायते ॥ ४० ॥ प्रह्लाद उवाच ॥
नाथ योनिसहस्रेषु येषु येषुव्रजाम्यहम्॥तेषु ते ष्व
चलाभक्तिरच्युताऽस्तु सदात्वयि ॥४१॥या प्रीति
रविवेकानां विषयेष्वनपायिनी ॥ त्वामनुस्मरतः
सामे हृदयान्मापसर्पतु ॥ ४२ ॥ विश्वामित्र उ
वाच ॥ किं तस्य दानैः किं तीर्थैःकिं तपोभिः कि
मध्वरैः ॥ यो नित्यं ध्यायते देवं नराणां मनसि
स्थितम् ॥ ४३ ॥ जमदग्निरुवाच ॥ नित्योत्सव
स्तदा तेषां नित्यश्री र्नित्यमंगलम् ॥ येषां हृदि
स्थो भगवान्मंगलायतनं हरिः ॥ ४४ ॥ भरद्वाज

उवाच ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां परा
जयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः
॥ ४५ ॥ गौतम उवाच ॥ गोकोटिदानं ग्रहणेषु
काशीप्रयागगंगाऽयुतकल्पवासः ॥ यज्ञायुतं मेरु
सुवर्णदानं गोविंदनाम्ना नकदापितुल्यम् ॥४६॥
अत्रिरुवाच॥ गोविंदेति सदा स्नानं गोविंदेति स
दा जपः ॥ गोविंदेतिसदा ध्यानं सदा गोविं
कीर्तनम् ॥ ४७ ॥ अक्षरं हि परं ब्रह्म गोविं
त्यक्षरत्रयम्॥ तस्मादुच्चारितं येन ब्रह्मभूयायकल्
ते ॥ ४८ ॥ श्रीशुक उवाच ॥ अच्युतः कल्पवृक्ष
सावनंतः कामधेनवः ॥ चिंतामणिश्च गोविंद
हरिनाम वि चंतयेत् ॥ ४९ ॥ हरिरुवाच ॥
यतिजयति देवो देवकीनंदनोऽयं जयति जय
कृष्णो वृष्णिवंशप्रदीपः ॥ जयति जयति मे

श्यामलः कोमलांगो जयति जयति पृथ्वीभारना
शो मुकुंदः ॥ ५० ॥ पिप्पलायन उवाच ॥ श्री
मन्नृसिंहविभवे गरुडध्वजाय तापत्रयोपशमना
य भवौषधाय ॥ कृष्णाय वृश्चिकजलाग्निभुजंग
रोगक्लेशव्ययाय हरये गुरवे नमस्ते ॥ ५१ ॥
आविर्होत्र उवाच ॥ कृष्ण त्वदीयपदपंकजपंज
रांते अद्यैवमे विशतु मानसराजहंसः ॥ प्राण
प्रयाणसमये कफवातपित्तैः कंठावरोधनविधौ स्म
रणं कुतस्ते ॥ ५२ ॥ विदुर उवाच ॥ हरेर्नामैव
नामैव नामैव मम जीवनम्॥कलौनास्त्येव नास्त्ये
व नास्त्येव गतिरन्यथा ॥ ५३ ॥ वसिष्ठ उवाच ॥
कृष्णेति मंगलं नाम यस्य वाचि प्रवर्तते ॥ भ
स्मीभवंतितस्याशु महापातक कोटयः ॥ ५४ ॥
अरुंधत्युवाच ॥ ॥ कृष्णाय वासुदेवाय हरये प

रमात्मने ॥ प्रणतःक्लेशनाशायगोविंदायनमो न
मः ॥ ५५ ॥ कश्यप उवाच ॥ ॥ कृष्णानुस्मर
णादेव पापसंघातपंजरः ॥ शतधा भेदमा प्नोति
गिरिर्वज्रहतो यथा ॥ ५६ ॥ दुर्योधन उवाच ॥
जानामि धर्मं न च मे प्रवृत्तिर्जानामि पापं न
च मे निवृत्तिः ॥ केनापि देवेन हृदिस्थितेन यथा
नियुक्तोऽस्मि तथा करोमि ॥ ५७ ॥ यत्र स्वगुण
दोषेण क्षम्यतां मधुसूदनः ॥ अहमेवमहं हंतुं
म दोषो न विद्यते ॥ ५८ ॥ भृगुरुवाच ॥ नामै
तवगोविंद कलौ त्वत्तःशताधिकम् ॥ ददात्युच्चा
णान्मुक्तिं विना अष्टांगयोगतः ॥ ५९ ॥ लोम
र्षण उवाच ॥ नमामि नारायणपादपंकजं क
मि नारायणपूजनं सदा ॥ वदामि नारायणना
निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥ ६०

शौनक उवाच ॥ स्मृत्वा सकलकल्याणभाजनं यत्र जायते ॥ पुरुष तमजं नित्यं व्रजामि शरणं हरिम् ॥ ६१ ॥ गर्ग उवाच ॥ नारायणेति मंत्रोऽस्ति वागस्ति वशवर्तिनी ॥ तथापि नरके घोरे पतंतीत्येतदद्भुतम् ॥ ६२ ॥ दाल्भ्य उवाच ॥ किंतस्य वहुभिर्मंत्रैर्भक्तिर्यस्य जनार्दने ॥ नमो नारायणायेति मंत्रः सर्वार्थसाधकः ॥ ६३ ॥ वैशंपायन उवाच ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थोधनुर्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवानीति मतिर्मम ॥ ६४ ॥ अंगिरा उवाच ॥ हरिर्हरति पापानि दुष्टचित्तैरपिस्मृतः ॥ अनिच्छयाऽपि संस्पृष्टोदहत्येव हि पावकः ॥ ६५ ॥ पराशर उवाच ॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ६६ ॥

विनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ धर्मार्थका
ममोक्षार्थी पांडवैः परिकीर्तितम् ॥ ७९ ॥ आकाा
शात्पतितं तोयं यथा गच्छति सागरम् ॥ सर्वदे
वनमस्कारः केशवं प्रतिगच्छति ॥ ८० ॥ इति
श्रीपांडवकृताप्रपन्नगीता संपूर्णा ॥

---



